| | | | | |
|---|---|---|---|---|
| ४. | मुरली विहार | संवत् | १८४६ | फा० बु० ७ रविवार |
| ५. | सुहाग रैन | ,, | ,, | ,, सु० १० बुधवार |
| ६. | विरह सरिता | ,, | ८५० | मा० ब० २ शनिवार |
| ७. | रेखता संग्रह | ,, | ,, | ,, सु० २ शनिवार |
| ८. | स्नेह विलास | ,, | ,, | ,, ,, २ रा.वार |
| ९. | रमक झमक बत्तीसी | ,, | १८५१ | आ० सु० १२ बुधवार |
| १०. | प्रीति पचीसी | ,, | ,, | का० सु० ५ बुधवार |
| ११. | ब्रज शृंगार | ,, | ,, | मा० बु० ६ रविवार |
| १२ | स्नेह संग्राम | ,, | १८५२ | जे० सु० ७ शनिवार |
| १३. | नीति मंजरी | ,, | ,, | भाद्र ५ गुरुवार |
| १४ | शृंगार मंजरी | ,, | ,, | ,, ,, |
| १५ | वैराग्य मंजरी | ,, | ,, | ,, ,, |
| १६ | रंग चौपड़ | ,, | १८५३ | आ० शु० १ रविवार |
| १७. | प्रेम पंथ | | | |
| १८. | दुःख हरण बेलि | | | |
| १९. | सोरठ ख्याल | | | |
| २०. | रास का रेखता | | | |
| २१. | ब्रजनिधि पदसंग्रह | | | |
| २२. | ब्रजनिधि मुक्तावली | | | |
| २३ | हरिपद संग्रह | | | |

इसके अतिरिक्त एक आयुर्वेद विषयक विशाल 'अमृतसागर' नामक ग्रन्थ भी ( गद्यात्मक ) इनका लिखाया हुआ है। इन सबसे इनकी सर्वतोमुखी प्रतिभा एवं वैदुष्य स्पष्ट प्रकट होता है।

ये ब्रजराज किशोर भगवान् श्री कृष्ण के परमभक्त थे और सुना जाता है कि इन्हें श्री गोविन्ददेवजी के प्रत्यक्ष दर्शन होते थे, किन्तु, वजीरअली की घटना+ के बाद से इन्हें प्रत्यक्ष दर्शन होना बन्द हो गया था। इस जनश्रुति में तथ्यांश विवादास्पद होने पर भी इनके पद्यों द्वारा इनकी भावुकता एवं इनका भगवद्भक्ति में निमग्न रहना निःसन्देह सिद्ध होता है। इनका एक कवित्त सुधीजनों के प्रसार हेतु यहां उद्धृत करना ठीक होगा—

+ कहा जाता है कि अवध के नवाब वजीरअली (वजीरुद्दौला) अंग्रेजों से विद्रोह करके भाग कर इनके यहां शरणागत हो गये थे, और इन्होंने उन्हें शरण देना स्वीकार भी कर लिया था किन्तु बाद में किन्हीं कारणों से इन्होंने अपनी प्रतिज्ञा तोड़ कर वजीरअली को अंग्रेजों को सौंप दिया। इससे भगवान ने इन्हें विश्वासघात के पाप से प्रत्यक्ष दर्शन देना बन्द कर दिया था और ये इस परिताप से आजीवन सन्तप्त रहे।

"सोंधे सनी सारी मांग मोतिन सवांरी कुच
कंचुकी निहारी मृगमद चित्रवारी है ।।
नैन अैन वारी बंक भौंह छवि भारी सुचि
सुषमा के अंकवारी देह दिपति दिवारी है ।।
कजकरवारी मुसकानि में उजारी, भौंर
भौंर भर वारी आली अलकैं सटकारी है ।।
राधे सुकुमारी 'ब्रजनिधि' प्रानप्यारी लखी
केसर की क्यारी वृषभान की दुलारी है ।।

ये कविता में अपना उपनाम 'ब्रजनिधि' रखा करते थे। यह उपनाम भी इन्हें भगवान ने ही दिया था-जैसा कि—

'अब तो जल्दी से आ दरस दीजै
जो इनायत किया है 'ब्रजनिधि' नाम ।।

( हरिपद संग्रह १६५ वाँ पद )

ये भट्ट जगन्नाथ जी के शिष्य थे और उन्हीं की कृपा से इन्हें भगवत्साक्षात्कार भी हुआ था, जैसा कि—

"मैं कहौं कहा अब कृपा तुम्हारी,
याहि कृपा करि गुरु मैं पाये जगन्नाथ उपकारी ।।"

( हरिपद संग्रह )

इन्होंने ब्रजनिधिजी का मन्दिर बनवाया और अन्त समय में रुग्णावस्था में भी ये वहीं मन्दिर के तहखाने में ( जो त्रिपोलिया से अन्दर की ओर चौक में पश्चिम की ओर है ) विश्राम किया करते थे। इन्होंने तत्कालीन उत्तर भारत में प्रचलित सभी भाषाओं, खड़ीबोली, ब्रज, राजस्थानी एवं उर्दू मिश्रित पंजाबीभाषा में रचनाएं की हैं, इससे इनकी सार्वदेशिकता पर अच्छा प्रकाश पड़ता है।

ये तत्कालीन प्रसिद्ध संगीतज्ञ, 'स्वर सागर' नामक संगीतशास्त्र ग्रन्थ के प्रणेता चुन्नप्रकाश के संगीत में शिष्य थे। इन्हें कविता के साथ साथ सङ्गीत एवं ललित तथा वास्तु, स्थापत्य आदि कलाओं के प्रति भी अपूर्व अनुराग था। इनके समय में ही 'श्री राधा गोविन्द संगीतसार' राधाकृष्ण कविकृत 'राग रत्नाकर' प्रभृति संगीत ग्रन्थों की रचना भी हुई थी।

इन्हें अपने दरबार में सब तरह के गुणीजनों की बाईसी संग्रह करने का विशेष शौक था। जैसे कवि बाईसी, वीर बाईसी, गंधर्व बाईसी, आदि।

ये जिस प्रकार स्वयं कवि थे उसी प्रकार कवियों के आश्रयदाता एवं संरक्षक भी थे। इनके समय में राय अमृतराम पल्लीवाल, ठाकुर बखतावरसिंह 'बखतेश' राव शंभूराम ब्रह्मकवि गणपति 'भारती' रसपुंज, रसराशि, चतुरशिरोमणि, सागर कविया, हुक्मीचन्द खीड़िया, महेशदास म्हाई, हरिदास, मनभावन, महाकवि भोलानाथ, मनीराम, वंसीअली, किशोरीअली प्रभृति सुकवि समुदाय इनकी सभा के शृंगार थे।

इनकी आज्ञा से अबुलफजलकृत 'आईने अकबरी' का जयपुरी भाषा में गुमानीराम कायस्थ ने अनुवाद किया था। बिहारी सतसई की प्रतापचन्द्रिका टीका कवि

मनीराम द्वारा तथा दीवान हाफिज का पद्यानुवाद भी इन्हीं के समय में हुआ था। इसके अतिरिक्त विश्वेश्वर महाशब्देकृत धर्मशास्त्र का महाग्रन्थ 'प्रतापार्क', प्रताप-सागर' (आयुर्वेद) 'प्रताप मार्तण्ड' (ज्यौतिष), राय अमृतराम पल्लीवाल कृत अमृतप्रकाश (अमुद्रित) प्रभृति अनेक ग्रन्थ तो इन्होंने अपनी प्रेरणा से लिखाये ही थे तथा 'प्रताप वीर हजारा' 'प्रताप शृंगार हजारा' जैसे पद्यों के संग्रह कराने में भी इनका बड़ा अनुराग रहता था। इस सबसे इनकी सर्वतोमुखी प्रतिभा एवं विद्वत्समादरवृत्ति का उचित परिचय मिलता है। स्थापत्यकला के भी ये अच्छे प्रेमी थे अपने समय में इन्होंने चन्द्र महल का विस्तार, ऋद्धिसिद्धि पोलि, दीवानखाना (बड़ा), श्री गोविन्ददेवजी के पीछे का हौज, हवामहल, श्री गोवर्द्धननाथजी का मन्दिर, व्रजनिधिजी का मन्दिर आदि बहुत सी इमारतें बनवाई। हवामहल के बारे में लिखा है कि :--

हवा महल या तैं कियो, सब समझो यह भाव।
राधे कृष्ण पधारसी, दरस परस को हाव॥

(व्रजनिधि ग्रन्थावली)

अन्त में अधिक चिन्तित रहने के कारण रक्त विकार और अतिसार से श्रावण शुक्ला १३ सं० १८६० में ४६ वर्ष की आयु में ही ये स्वर्ग सिधार गये।

ये अपने समय के एक विशिष्ट, प्रतिभासम्पन्न, मनस्वी राजा थे। राजकार्य में उलझे रहने पर भी स्वयं इतने ग्रन्थों का प्रणयन करना, युद्धों में भाग लेना तथा इतने ग्रन्थों का निर्माण कराना कोई साधारण कार्य नहीं है। ये सुकवि महाराजा साहित्यकार के रूप में हिन्दी भारती के भव्य भवन में श्रद्धामय पद्य-पुष्प समर्पित करने के कारण साहित्याकाश में एक जाज्वल्यमान नक्षत्र की भांति अपनी प्रतिभाप्रभा से चिरकाल तक प्रकाशमान रहेंगे।

कृतज्ञताज्ञापन

जैसा कि ऊपर निवेदन किया गया है 'कर्णकुतूहल' और 'श्री कृष्णलीलामृतम्' की एक मात्र प्रति कवि के वंशज श्री मनोहरलालजी के पास ही उपलब्ध हुई और उन्हीं के आधार पर प्रतिलिपि करके इनका मुद्रण कराया गया है। प्रति में जहां कहीं अशुद्धि अथवा लिपिकर्ता की भूल से अक्षरच्युति आदि रह गई थी उन्हें यथाशक्य ठीक करने का प्रयत्न किया गया है और पदटिप्पणि में संकेत कर दिया गया है। अन्त में, एक बार फिर श्री मनोहरलालजी को प्रतियां देने के लिए धन्यवाद देता हूँ और मुनि श्री जिनविजयजी महाराज के प्रति कृतज्ञताज्ञापन अपना कर्तव्य मानता हूँ जिनके मार्गदर्शन में इन कृतियों का सम्पादन कार्य हुआ है और जिन्होंने इस अकिंचन प्रयास को कृपापूर्वक प्रकाशित करने की आज्ञा प्रदान की है।

राजस्थान पुरातत्त्वान्वेषण मन्दिर; गोपालनारायण

जयपुर; ८-२-५७

|| श्रीगणेशाय नमः ||

महाकवि-भोलानाथ-विरचितं

# कर्णकुतूहलम्

अर्द्धाङ्गे गिरिराजरत्नतनया पूर्णेन्दुबिम्बानना
गङ्गापन्नगभस्मपात्रककलाचर्म्माम्बरं वान्यतः।
देवानां निकरैर्निषेव्य ✱ नितरां संस्तूयतेऽहर्निशं
सोऽयं शाश्वतिकं सुखं वितनुतां श्रीसाम्बमूर्तिः शिवः १॥

नान्द्यन्ते सूत्रधारः (नेपथ्याभिमुखमवलोक्य) अये गुणविशारदे देवि! यदि नेपथ्यकार्यं जातमितस्तावदागम्यताम्।

**नटी–** अज्जउत्त इअह्मि अज्जेण को पओगो अणुचिट्ठीअते तं आणवेदु। ❀

**सूत्रधारः–** आर्ये! समस्तसामन्तनृपचक्रचूडामणिभूमण्डलाखण्डलकिरीटरञ्जित-चरणारविन्दः श्रीरत्नेशतनय औदुम्बरकुलालङ्कारो विघ्नराज इव विघ्नविध्वंसकारी सुरगुरुरिव कूर्मवंशगुरुः अद्वैतबोधतिरस्कृताखिलध्वान्तो (१ B) द्वैपायनो वेदव्यास इव विदिततत्त्वावबोधः दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति गोतम इव प्राप्तभगवद्विषयकबोधकः पाकशासन इव प्रजापालनसमर्थः धनद्य (द) इव पूरितसद्मकोषविशेषः पार्थ इव धनुर्द्धरः धर्मराज इव सत्यवादी कर्ण इव कृतसुवर्णदानराशिः तपन इव प्रतापनिधिः कलानिधिरिव विशदप्रभः विष्णुरिव प्रबलभुजदण्डः रुद्र इव विनाशितसपत्नसमूहः श्रीमान् भट्टसदाशिवोऽस्ति तस्येयं परिषदतीव निपुणा तदर्थं अपूर्वं किञ्चिन्नाटकं नाटयितव्यं तत्रार्ये पात्रवर्गः सम्पाद्यताम्।

**नटी–** भोदु महाराअ एव्वमेव्व ता महाराअभट्टस्स किंत्तिं (२ A) सुणम्हि भणादु महाराओ। ×

---

✱ निसेव्य इति प्रतौ।

❀ आर्यपुत्र! इयमस्मि, आर्येण कः प्रयोगः अनुष्ठीयते तं आवेदयतु।

× भवतु महाराज एवमेव तावत् महाराजभट्टस्य कीर्तिं शृणोमि भणतु महाराजः।

**सूत्रधारः**— आर्ये ! शृणु तावद्वर्णयामि, यथा—

भूदेवेषु नतिर्मतिर्वितरणे दीने दया भूयसी
प्रीतिः पुण्यकथासु भीतिरनिशं पापात्सुनीतिर्नये ।
शूरत्त्वे कृतिरुन्नतिः सदसि वाक् सत्ये हरौ सज्जने
भक्तिर्भट्टसदाशिवक्षितिपतेः सर्वं परप्रीतये ॥२॥

नासामौक्तिकमद्रि ÷ राजतनयाबिंबाधरे राजते
भूत्वा चन्द्रकला नगेशतनय।भाले शिवे तत्सुते ।
शीतांशावमृतं सरस्सु सततं हंसा हरावम्बुजं
श्रीमद्भट्टसदाशिवस्य सुयशः सर्वत्र भूषायते ॥३॥

दिङ्नागा धवलीकृता जलधयः कामस्तथा वारिदा
वृत्ता वारिचराः पिकाः शनिरसौ पापानगाः पन्नगाः ।
दृष्ट्वेदं हरि × रीश्वरः स्मितमुखोऽपृच्छत् प्रियां साऽवदत्
श्रीमद्भट्टसदाशिवस्य यशसा कृ (२ B) ष्णोऽपि हंसायते ॥४॥

नेत्राणां चषकैर्निपीय सुधियः पीयूषपूरोपमं
लावण्यं त्रिबुधास्ततः श्रुतिगणा प्राप्तार्थतत्त्वास्ततः ।
पद्माणीह लगंति नैव सुदृशां तेषां न तृप्तिर्यतः
श्रीमान् भट्टसदाशिवो विजयते चन्द्राननः सर्वदा ॥५॥

कविरिव काव्यरसज्ञो रविरिव प्रतापनिधिर्भूयान् ।
भट्टसदाशिवनामा स जयति विधुरिव श्रीमान् ॥५॥

इति सूत्रधारोक्तं सर्वं सरसतासंपादकत्वेनाकर्ण्य सहर्षमनुभूय नटी वक्ति—

❀ अच्चिरअं अच्चिरअं अत्त लोए एतादिसो णिपो दुल्लहो होइ जादिसो अज्जउत्तेण उतोत्थिए तस्स अग्गे अपुव्वं कुदूहलं णाटकं कत्तव्वं एतस्स महाराअस्स घरे गेहणी सुणीदा सग्गदो ओतरिआ गंगा एब भोदि रूएण लच्ची एव्व पत्तिणो भत्ति-पराइणा अ (३ A) अरुन्धती एव्व दाणेन कल्पलदा एव्व कित्तीए जोन्हा एव्व किं अन्न चरिअं एत्तिस्सा भणितव्वं ॥

÷ 'मध्विराज' इति प्रतौ । × 'हारि ईश्वरः' इति प्रतौ ।

❀ आश्चर्यम् आश्चर्यम् अत्र लोके एतादृशोः नृपो दुर्लभो भवति यादृशः आर्यपुत्रणो उत्थितस्य तस्य अग्रे अपूर्वं कुतूहलं नाटकं कर्त्तव्यं एतस्य महाराजस्य गृहे गृहिणी सुनीता स्वर्गादवतीर्णा गंगा एव भाति रूपेण लक्ष्मीरेव पत्युर्भक्तिपरायणा च अरुन्धती एव दानेन कल्पलता एव कीर्त्या ज्योत्स्ना एव किमन्यच्चरित्रं एतस्या भणितव्यम्—

जहा रूअगुणाकिदिलच्छीसीलं डिट्ठं ण पुहमितल एतिस्सा ।
लज्जहि का णहि लोए लाअण्णं भूरिदाणं अ ॥७॥ ❀

[ इति निश्चित्य सर्वे निष्क्रान्ताः ]

मारिष इतस्तावत्, कथयतु कुत्र भवदीयोऽभिलाषस्तिष्ठति ।

**सूत्रधारः–** शृणु मारिष, अत्र मत्स्यदेशे महाराजाधिराजो भूरियशाः श्रीमाधवेशनामा बभूव तत्कथा कथ्यतां ।

**मारिषः–** कथ्यते भाव ! स च समस्तसामन्तविदारितारिमण्डलः साक्षादाखण्डलप्रचण्डपराक्रमः ॥ यथा—

प्रचण्डदोर्भ्यामतिदारिता रणे
खला अखण्डानलतुल्यतेजसा ।
समस्त–पाखण्ड–विदाहिताटवी
नृपेण येनाशु महत्प्रतापिना ॥८॥

य ( ३ B ) स्याग्रे नहि तिष्ठन्ति भटभूपाश्च संगरे ।
सखड्गं कुपितं द्रष्टुं कः सहेत यमं नरः ॥९॥

साक्षाद् भर्ग इव प्रभुः स दहने तूर्णं परेषां पुरां ( न् )
दुष्टध्वान्तविदारणे विभुरसौ यस्य प्रतापो रविः ।
श्रीमच्चन्द्रकलाकलापविशदा कीर्तिर्दिगन्तं गता
सोऽयं राजकुलेषु भाति नितरां श्रीमाधवेशो नृपः ॥१०॥

हंसी भूत्वा व्रजन्ती दिशि दिशि विदुषां पङ्कजास्ये वसन्ती
जिह्वाग्रान्निस्सरन्ती निखिलसुरमुनिव्रातवन्द्योल्लसन्ती ।
तत्तन्मन्त्रान् पठन्ती सपदि परपदप्राप्तसिद्धिं ब्रुवन्ती
सर्वार्थान् पूरयन्ती श्रुतिरिव विदिता माधवेशस्य कीर्तिः ॥११॥

त्वयि सति माधव दातरि कः कर्णः परश्च भोजः कः ।
उदिते सवितरि केऽन्ये ताराकाराः प्रतापकराः ॥१२॥

अखिलावनीशचक्रचूडा [४ A] मणिर्महाराजाधिराजः श्रीमान् जयसिंहनामा तज्जनको बभूव–यथा –

यस्य क्षोणिपतेः प्रतापतपनस्त्रस्तारिभूभृत्परं
दीनध्वान्तदरिद्रदारणपटुः संस्तूयतेऽहर्निशम् ।

---

❀ यथा रूपगुणाकृतिलक्ष्मीशीलं दृष्टं पृथ्वीतले एतस्याः
लज्जति का नहि लोके लावण्यं भूरिदानं च ।

मित्राम्भोजविकासकारि विलसद्भास्वत्करः कीर्त्तिदः
सोऽयं श्रीजयसिंहभूपतिरभूद्राजाधिराजोऽनघः ॥१३॥

श्रीरामचन्द्रसमविजययोग, श्रीकृष्णसदृशकृतभूरिभोग
रघुवंशतिलकजयसिंहभूप, निजभक्तपाल नरसिंहरूप ॥१४॥

कृतहेमदान जितकर्णदेव, नृप धर्मराज इव धनध (द) एव ।
दिनकरसमतेजःपुञ्जरूप, जितशरच्चन्द्रजयसिंहरूप ॥१५॥

रिपुजलरुहलक्ष्मीहारिधामैकधामा
कुवलयकुलचक्रप्रीतिदत्तोत्सवश्रीः ।
परमविशदमूर्तिर्द्दृक्चकोरैकसेव्यो
नरपतिजय [४ B] सिंहश्चन्द्र एवापरोऽभूत् ॥१६॥

तत्पौत्रो समस्तजगतां परमदैवतरूपो विजितारिमण्डल आखण्डल एवापरो भूमेः सहस्रांशुरिव विकासिताखिललोकः लोकनाथ इवावनिपालः कलानिधिरिव जगदानन्ददायकः श्रीमान् परमप्रतापी महाराजाधिराजः श्रीप्रतापसिंहोऽस्ति ॥ यथा—

सूर्यः साक्षान्मित्रवर्गेण रूपे साक्षात्कामः कामिनीभिर्व्यलोकि ।
चन्द्रः साक्षाल्लोचनैः सज्जनौघैः साक्षादिन्द्रो भूमिपैः श्रीप्रतापः ॥१७॥

दृष्टो देवैः पार्थतुल्यो रणेऽसौ
दाने दृष्टः कर्ण एवापरो वा ।
रामः साक्षाद्धीरतायां नरौघै-
र्दृष्टः किं वा सप्रतापः प्रतापः ॥१८॥

इन्दुर्मुखं भवति वागमृतं मुखेन्दौ
सत्यं सदैव वचनामृतमेतदीये ।
सत्ये सधर्ममतिरस्य हरिर्मतौ च
भक्तिर्हरौ विज (५ A) यते परतापसिंहः ॥१९॥

प्रतापोऽस्मिन् लोके प्रतपति दिनेशोदितकरो
रिपौ वा मित्रे वा समकरनिपातो दिनकरः ।
पर बुद्धौ भेदो नहि भवति भेदः प्रतपने
प्रजानाथः श्रीमान् प्रभवतु सदा नः प्रभुरसौ ॥२०॥

मृगाङ्कोऽयं रङ्कः प्रभवति सपङ्कः सुमनसां
दिनेशेऽस्तं याते मलिनमुख एवोदयति च ।

निशायां धृष्टोऽसौ न हि भवति लज्जावृतमुखो
जितो राजन् लोके तव विधुमुखस्य प्रतिभया ॥२१॥
पङ्केरुहमिदमम्बुनि जितलक्ष्मीकं निमज्जितुं भवति ।
तव मुखचन्द्रप्रभया, पृथ्वीतिलक प्रतापनिधे ! ॥२२॥

सूत्रधार एवं प्रस्तूयात्रोचत्—

भाव ! श्रीमहाराजोऽयं सभां कृत्वेदानीं तिष्ठति नाट्यं विधेयमेतस्याग्रे सभ्याश्चातीव विदग्धाः सन्ति ।

नटी कतिपय सखीभिः परिवृ [५ B] ताऽऽगता स्वर्गात् स्वर्वधूरिव झणझणायमानरत्नभूषणचया । ततः पञ्चाङ्गुलिं कृत्वा 'जअतु जअतु महाराओ' * इत्याशिषं दत्त्वा अतिष्ठत् ।

तत एकतालं तत सुषिरादिवृत्तो ÷ मृदङ्गध्वनिरभूत् । नटीमवलोक्य सभ्या वर्णयन्ति—

उदयति विधुरेव यत्प्रकाशः प्रसरति दिक्षु कुतोऽयमेति तर्कः ।
अनुसृत इव यच्चकोरवृन्दैः परितः पश्य सखे ह्यपूर्वदृष्टः ॥२३॥

उदयति किमु वा शशी सलीलं किमु ललना भवतीति मे वितर्कः ।
प्रसरति विशदप्रभा समन्तात् सुरललनैव नरीपु नैव दृष्टा ॥२४॥

किं वा शशी मुकुरबिम्बमदोऽरविंदं
किं वा मुख सरसिजे हरिणौ दृशौ किम् ।
गुच्छौ खगौ किमुत हेमघटौ कुचौ किं
क्षीराब्धितोऽवनिगता कमलाबला किम् ॥२५॥

सालस्यैर्गतिविभ्र [६ A] मैर्मृगदृशा हंसा निरंशाः कृताः
वार्यन्ते वरवारणाश्च विजिताः सिंहाः सुमध्येन च ।
इन्दुश्चारुमुखेन पद्मलदृशा पद्मानि नो दृक्पथे
कस्माद्देशत आगतेऽयमबला साक्षाद् भवेत्स्वर्वधूः ॥२६॥

लावण्यस्य तरङ्गिणी भवति किं मज्जन्ति चेतांसि यत्
बाणाः किं कुसुमायुधस्य सकलं व्याहन्यते वीक्षणात् ।
संगीतस्य च गीतकस्य च निधिर्वाणी नरीनृत्यते
भूमिः किं भवमोहनस्य च करक्रोडे जगद्वर्त्तते ॥२७॥

---

* जयतु जयतु महाराजः । ÷ 'वंशादिकं तु सुषिरं कांस्यतालादिकं घनमि'त्यमरः ।

तत्र सुमुखस्तुत्या गीतं गीयते—

एकदन्त लम्बोदर गौरीसुत विघ्नराज
जय जय जयकारी विजयं त्वं देहि।

दत्त्वा सस्वरतालं सविलासं ह्यप्सरसस्तत्थेइ
थेइ नृत्यन्ति प्रणयं तदवेहि।

धिकट धिकट मुरजध्वनिसंगीतं गायन्त्यः
परमेश्वर महाराजं त्वधिकं [६ B] परिपाहि ॥

काव्यमिदं भोलानाथः कुरुते स्म श्रुतिसारं
हृदि कृत्वा परमेशः सुखमनुभूतं याहि ॥२७॥

करुणासिन्धो श्रीमुरारे !
कृष्ण कृष्ण यदुवंशधुरंधर कंसारे !
कुरु वासं करुणामय मम हृदय उदारे,
भोलानाथं तारय पतितं भवपारावारे ॥२८॥

शिव शिव वृषभध्वजेश वामदेव महादेव !
विजयं त्वं देहि श्रीसदाशिव दयालो !
भूतप्रेतपैशाचाः नृत्यन्तो धावन्तो
धावन्तो हहहेति हसन्तश्च कृपालो !
गायन्तो गन्धर्वा अप्सरसः सगीतं
नृत्यन्ति श्रुतिभिः सहदेवैरभिवन्द्यः
भोलानाथेन सता कृतमेतद्यः
पठति स्फुरति प्रभुरीशस्तस्य हृदय आद्यः ॥२९॥

श्यामा अराला शुचयोऽतिदीर्घाः काकोदराः किं शिखिबर्हभारः।
केशास्तवैते सुदृढं मनो मे बध्नन्ति पाशाः किमु वा भवन्ति ॥३०॥ [७A]

शशिप्रभं प्रियामुखं चकोरनेत्रयोः सुखं
ददाति कर्णयोः सदा वचोऽमृतं विशेषतः।
सरोजरूपसुन्दरं पतन्ति षट्पदा मुहुः
प्रसाधशालि-केशपाश-मेघवृन्दसंवृतम् ॥३१॥
मृगालिमीनखञ्जनाब्जहृच्चकोरचञ्चले
दृशौ विशाल-कर्ण-गेहतो हृदन्तरं मम।

झषध्वजस्य किं यतः शिलीमुखाः समन्ततः
पतन्ति सव्यसाचिनः खरा अतिप्रतापिनः ॥३२॥

पद्मे केचन सुधियः केचन मीनौ लपन्ति विद्वांसः ।
भवतो नयने नयने तनुतः किल कौतुकानि यतः ॥३३॥

अधरः किमु विद्रुमोऽरुणः किमु बिम्बं भवतीव सुभ्रुवः ।
अमरोऽपि नरोऽपि वा पिबन् सुकृती मन्दतरः कथं भवेत् ॥३४॥

धरतीति धरो भवत्यसावधरः कि मम संशयो मह्य [७ B] न् ।
कथयन्ति न ते बुधाः सखे ह्यपवर्गः कथमस्य पानतः ॥३५॥

कर्णावेतौ भावविज्ञौ रसज्ञे दृष्ट्वा चेतो याति वक्तुं मदीयम् ।
कूपावेतौ तत्र मीनौ पतन्तौ ज्ञात्वा भूयो द्वारदेशे ह्यतिष्ठत् ॥३६॥

द्विजाः किं तस्या वागमृतपदपुण्यैकनिलयाः
सरोजास्ये दानप्रतिदिननिदानव्रतपराः ।
सुधांशोर्वा जाता द्विगुणितमयूखाश्च विशदाः
कलाकौशल्यं वा रतिपतिकथाया गुणगिरां ॥३७॥

चिबुकं स्थलजातमम्बुजं तिलसंपर्कसमन्वितं प्रिये ।
अलिरेत्य पिबत्यसौ मधुप्रसभं तत्समुखं यथारुचि ॥३८॥

तव नासाचलमौक्तिकं प्रियेऽधरबिम्बे प्रतिबिम्बतां गतम् ।
किमु चञ्चुपुटेन तत्फलं चिनुते कीर उपेत्य सुव्रतः ॥३९॥

ग्रीवेयं तव बाले शङ्ख इवाऽभाति भूरि भ [८ A] व्यतनुः
ध्वनिमभिजातवामो ध्वनयति कामो जगद्विजयी ॥४०॥

किमु वक्षोजौ बाले ! किमु खगगुच्छौ कनककलशौ किम् ।
श्रीफलरूपौ किमु वा भूधरवेषौ मुनी भवतः ॥४१॥

अतिमृदुलौ तव बाहू प्रियतमकण्ठस्य पाशौ ।
बध्नीतः कथमेतौ हृदयं तस्यातिसक्तस्य ॥४२॥

उदरं तव भाति सुन्दरं शुभरोमावलिसंयुतं स्तुतं ।
नयने मम खञ्जने प्रिये ससुखं तत्र च खेलतोऽनिशाम् ॥४३॥

करौ किमेतौ भवतो भवत्याः छन्दौ किमेतौ जलजायताक्ष्याः
मनो मदीयं स्वपितीह जाने मधुव्रतो विस्मृतसर्ववृत्तः ॥४४॥

नाभिर्वापी काञ्चनी यत्र भूमिर्नीलाकारा वल्लरी यत्र भाति
श्वेतश्यामौ खञ्जनौ तत्र नेत्रे खेलत्खेलं चेरतुश्चारुचारौ ॥४५॥ [८ B]

मध्यप्रदेशो भवतीव नो वा भवेच्च किं नो नयनार्थगोचरः।
लब्धेरभावात् खलु तार्किकाणां भवेच्च किं नोनुपलब्धिसिद्धिः ॥४६॥

जघने तव राजतोऽबले प्रबलौ मन्मथराजवीरकौ।
निबिडे सुघटेऽतिमांसले कनकाभे जितकामसंगरे ॥४७॥

विधेः कुलालस्य किमद्भुतं भवेत् चक्रं किमद्रेश्च्युत एकदेशः।
तरङ्गिणीकूलमतो मनो मे भ्रमत्यजस्रं तरुणीनितम्बे ॥४८॥

शुण्डादण्डो निर्जितो मे स हस्ती धूलिक्षेपं भालदेशे करोति।
जाता रम्भा जङ्घया दर्पहीना श्रुत्वा रंभा चेतसा दूयते स्म ॥३६॥

तव चरणौ किमु चतुरे जलजे जलजाक्षि किमु च मृदुपत्रे।
भ्रमतो मम चित्तस्य स्थिरता जायेत नो चलति ॥५०॥

अङ्गुल्यस्तव चपले चम्पककलिका भवन्ति मे [९ A] तर्कः।
किं कुसुमायुधबाणा मम हृदयङ्गमाः कथं कथय ॥५१॥

नखानि चारूणि चकोरनेत्रे लसन्ति चाम्पेयदलेषु जाने।
मुक्ताफलानीव धृतानि वेधसा ताराः स्फुरन्त्यः किमु हीरकाणि ॥५२॥

एवं गानेन नृत्येन च तासां निशार्द्धमगमत् ततः समाप्तपटहध्वनिरभूत्।

[इति] श्रीनृपतिचूडामणिश्रीभट्टसदाशिवप्रीतये भोलानाथस्य कृतौ कर्णकुतूहले राजवर्णनं प्रथमं कुतूहलं जातम् ॥१॥

ततः सर्वे नर्त्तका बहिर्गताः ॥ पुनर्महाराजः प्रतीहारीं प्रेष्य महिषीमाजुहाव पल्यंकगतश्च प्रतीहारी श्रीगत्वाऽवदत्—

श्रीदेवि ! भवती महाराजेनाहूतास्ति, गंतव्यमिति श्रुत्वोवाचावश्यमेवेति देवी।

हंजे तुरिअं करणीअं कज्जं तुए कत्तव्वं भूषणमंजूखां आणेदु ॥ ❀

❀ हले त्वरया करणीयं कार्यं त्वया कर्तव्यं, भूषणमञ्जूषां आनयतु

चेटी ततथाकरोत्। राज्ञी स्वात्मान (९B) मलंकृत्य गन्तुं सन्नद्धा बभूव। कतिपयसखीभिः सार्द्धं गता प्रणम्याग्रे स्थिता ऽभूत्। तामवलोक्य महाराजो वर्णयति—

सघनो विधुरेव स प्रभो जलजे तत्र मधुव्रतौ स्थितौ।
तदधः किल कीर एव वै शुचि बिम्बं परिचुम्बति स्वयम् ॥१॥

अस्याः किं शशितो जनिर्जलनिधेः किंवा हरेर्गात्रतः।
किं वा वारिदवृन्दतः स्वयमियं जातातिहर्षप्रदा।
किं वा कामत एव जन्मविधितो नैवाविरासीद्ध्रुवं
चञ्चच्चारुचकोरनेत्रचपलैर्नेत्राञ्चलैर्वीक्षते ॥ २ ॥

चन्द्रः किं शशलक्ष्म नैव वदनं बिभ्रद् धनुर्मण्डलं
यस्माच्चैव चलन्ति भूरि विशिखा विध्यन्ति चेतश्चलम्।
किं वा काञ्चनवल्लरी सकुसुमा मन्दं चलन्ती क्षितौ
कान्ता या हृदि वर्त्तते मम सदा सेयं पुरस्तात् स्थिता ॥३॥

कान्ते! आयाहि।

सा [१० A] तथैव करोति स्म। तत्करं गृहीत्वा नृपः प्रार्थयते—

त्वं मे वै हृदयं गतासि चतुरे मग्नं मदीयं मनः
सत्यं नो चलतीव मज्जतितरां भृङ्गो यथा वारिजे।
तस्मान् मां सदयं निरीक्ष्य विलसद्वामोरु नेत्राञ्चलै-
र्हत्वा जीवय जीवय प्रियतमे बद्ध्वाञ्जलिं प्रार्थये ॥४॥

तत्र मुखमम्बुजममले नेत्रे पाणी च पादौ च।
मम किल मधुपश्चेतः परतो भ्रमतीव च भ्रमति ॥५॥

त्वं मे प्राणप्रदासि त्वयि च मम सदा वर्त्तते प्राण एव।
त्वं बाले देहि देहि प्रसभमहमसौ व्याकुलस्तेन हीनः।
दत्तो ऽयं मे न तेऽस्ति श्रुतिपथमगमद् वाक्यमेतत्तदीयं
वक्तुं पश्चात् प्रतापः प्रतिवचनमहो नाचकांक्षे मृगाक्षी ॥६॥

राज्ञी महाराजोक्तमाकर्ण्य सखीं वक्ति—

हला महाराओ किं कथेदि सुणी [१० B] दंतु ए सखी।

सखी—सुदं मए इदं महाराओ तुअ अधीणोत्थि। किं अदो वि परं भोदीए उक्तं अ॥ ❀

गिरितः पतनं सुखावहं पतनं वारिनिधौ तथैव च।
अनले ह्यवटेति कर्दमे पतनं प्रेम्णि न कस्यचिद् भवेत्॥७॥

इति श्रुत्वा सहर्षं राज्ञी उवाच सखीं—

सहि किल होइ अहीणो जइ कंतो किं फलं तदो वि परं।
णहि हं जाणे मंतं कधमेतादिसो अहीणो हि॥८॥ †

देइ देसो अग्गं कध वण्णणीअं जिस्स महाराओ ईदिसो अधीणोत्थि।

महाराजः प्रियोक्तमाकर्ण्य प्रियाकरं गृहीत्वा शय्यायां स्थापयामास।

सीधुपानमुदितः सहकर्तुं वल्लभो वनितया जलजाद्या।
तेन संयुतमयं मधुपात्रं प्राददे प्रियतमाकरतोऽलम्॥९॥

पिब पिबेति लपन् बहुधा वचो निजकरेण मुखे सम [११A] योजयत्।
जलरुहाक्षि कुरुष्व मदीरितं न न ननेति ननेति जगाद सा॥१०॥

कदापि विघ्नेन कथंचिदुक्तं ननेति वर्णद्वयमर्थयुक्तम्।
तवाननं चन्द्रसमप्रभं स्यात् सुधामयं नेत्रचकोरहारि॥११॥

भवती भवतीव वर्त्तते हृदये मे हृदयङ्गमेऽनिशम्।
अहमेव भवामि च प्रिये त्वमिति त्वं कथमन्यथा भवेः॥१२॥

बद्ध्वाञ्जलिमहं याचे मधुपानं कुरु प्रिये।
सम्भोगचारुसुखदं दम्पत्योः सुखमिच्छतोः॥१३॥

राज्ञी सहासमाह – किं एव्वं भ्रूषे, हंहे दासी होमि यत्तुए कत्तव्वं तत् मए वि करणीअं॥ +

❀ हले महाराजो किं कथयति शृण्वन्तु ए ख्यः श्रुतं मया इदं महाराजः तव आधीनोऽस्ति। किं अतोऽपि परं भवत्या – उक्तं च

† सखि किल भवति अधीनो यदि कान्तः किं फलं ततोऽसि परं। नहि अहं जाने मंत्रं कथमेतादृशो अधीनो हि॥ देवि ईदृशो अग्रं कथं वर्णनीयं यस्याः महाराजाः ईदृशः आधीनोऽस्ति।

+ किं एवं भ्रूषे–अहं दासी भवामि यत्त्वया कर्तव्यं तत् मयाऽपि करणीयं।

राजा—त्वं मे प्राणप्रियासि प्रचलनयनयोः कान्तदृक् प्रान्तपातै-
र्भित्वा चेतो मदीयं विषमशरवशं किं करोषीत्ययोग्यम्।
याचे त्वाहं मनोज्ञे सरसि [११ B] जनयने सुप्रसादं कुरुष्व
प्रेम्णा ते ऽहं प्रबद्धः कुरु ममवचनं सीधुपात्रं गृहाण ॥१४॥

राज्ञी—भोदु महाराअ अमेव्व। ⁂

सीधुपानमकरोद्वनिता सा प्रियतमेन सहितानुमतिज्ञा।
चारुचन्द्रवदनं ललनायाश्चुम्बति स्म सरसं स रसज्ञः ॥१५॥

चारुपङ्कजमुखं जलजाद्याः पश्यते स्म नृपतिः सविलासम्।
दन्तवासविशदद्युतिदन्तं संभ्रमद्भ्रमरनेत्रनिवासम् ॥१६॥

पीत्वा पीत्वा वक्त्रलावण्यमस्याः दृष्ट्वा दृष्ट्वा दृग्विलासैकपात्रम्।
स्मृत्वा स्मृत्वा रूपसंपन्निवासं घूर्णन् नेत्रे विस्मयं सोऽभ्यगच्छत् ॥१७॥

केशाः किं रात्रिरेषा रतिपतिरनिशं तत्र शेते नितान्तं
तं द्रष्टुं चित्तमेतद्व्यचलि समधिकं तेन तत् तत्र बद्धम्।
नैवान्यत्रापि गन्तुं प्रचलमपि ततः शक्यते किं ब्रवीमि
प्रोद्धारं तस्य कुर्याः सरसिजव [१२ A] दने प्रेमबद्धोऽस्मि तेऽहम् ॥१८॥

शशिप्रभं ते मुखमम्बुजप्रभं वदन्ति ते पण्डितमानिनो बुधाः।
अनन्तसाम्राज्यकलाकलाप–प्रभालसत्सीधुविलासि दृश्यते ॥१९॥

ससीधु ते चन्द्रमुखं विलासात् क्षणं क्षणं स्वादुविशेषशालि।
तिरस्कृताशेषसुधारसोत्सवं लपँल्लपन् तल्लपनं पपौ सः ॥२०॥

निपीय तस्यामुखमम्बुजप्रभं जगाम तृप्तिं न मधुव्रतो यथा।
तथैव लीलायि + चकोरलोचना न तृप्तिमागात् ससुखं जहास ॥२१॥

नीत्वोपकण्ठं स्वकरेण बाला तत्पानपात्रं पिबतो नृपस्य।
तत्रैव तस्याः प्रतिबिम्बितं मुखं पपौ सुखं स्वादुतरं नृपालः ॥२२॥

पपौ मुखं सादरतोऽबला सा ससीधुपानं तृषिता सलीलम्।
सहासवाग्भिर्विलसद्द्विजालिस्मितेन साक्षाद्रति [१२B] रेव कामम् ॥२३॥

⁂ भवतु महाराज एवमेव। + लीलायु इति साधुपाठः।

अतीवकान्तं मुखमम्बुजाक्षि ते तथैव बिम्बाधर एष रोचते।
परस्परं द्वावपि चारुचेष्टितैः क्रियाविलासं कुरुते स्म सस्पृहम् ॥२४॥

पपावासवं चारुवक्त्रेण साकं
स्पृशन् वृत्तवक्षोजगुच्छौ विलासी।
हसन् हासयँल्लोलदृक्प्रान्तवर्षी
कलाकौतुकी कामदेवो हि साक्षात् ॥२५॥

अरालधम्मिल्लनिबद्धचित्तः कलाविलासैस्तव संगृहीतः।
पिबामि वक्त्रेण समं मदालसे सुधासवं ते वचनामृतैश्च ॥२६॥

सत्यं प्राणसमासमानविलसत्कल्लोललीलारस-
प्रोद्यद्दामकुतूहलामलमिलत्क्रीडोल्लसन्मानसे।
पश्यन्ती मृगबालदृग्विलसितैर्मां दीनदान्तं प्रिये
देहि प्रोद्धतकामशान्तिमधुना जाने त्वमेवौषधम् ॥२७॥

राज्ञी—किं महाराअेण [१३ A] कहीअदि दासी देह्मि। ❀
राजा वारुणीपूर्णं पात्रं ददाति। सा पिबति स्म।
अदायि राज्ञाऽपि पुनश्च पात्रं पपौ नृपो नेत्रविलासकारी।
एवं सरागौ सुखशालिवेषौ बभूवतुस्तौ मधुपानतो भृशम् ॥२८॥

मुखं त्वदीयं कमलायते प्रिये मनो मदीयं भ्रमरायते तथा।
कृतं हि संयोगविधानमेतयोर्विरञ्चिना प्रेमनिबद्धचेतसोः ॥२९॥

पीयते स्म सरसं मधु पत्या चुम्ब्य चुम्ब्य वदनं वनितायाः।
तद्वदेव मकरध्वजबन्धोराननं जलजवज्जलजाक्ष्याः ॥३०॥

मा कुरु मानिनि मानं मानोऽयं विप्रलम्भहेतुरये।
भ्रूभङ्गस्तव कुटिलश्चेतो मे हन्त हन्तीव ॥३१॥

त्वं मे चेतसि विहरसि सरसं हंसी यथानिशं सरसि।
बहिरपि त्वं मे भवसि [१३ B] प्रेयसि त्वं मे तदपि जाने ॥३२॥

इति प्रियोक्तं सरसं निशम्य लतेव वृक्षं सहसाऽबला सा।
मृणालदोर्भ्यां ससुखं स्ववक्षसा निपीड्य तस्यान्तरयांबभूव ॥३३॥

❀ किं महाराजेन कथ्यते। दासि देहि।

मुखं मुखस्योपरि संनिधाय निपीड्य वक्षः किल वक्षसा तु ।
सुखं समाजग्मतुरेकचित्तौ यदद्वयानन्दमयं वदन्ति ॥३४॥
एकीभूतौ तत्सुखे दम्पती तौ पीत्वा पीत्वा सीधु बिम्बाधरोत्थम् ।
गाढालिङ्ग कोमलाङ्गेषु कृत्वा कामं पूर्णानन्दलाभं प्रयातौ ॥३५॥

इति वदनसरोजौ कान्तिकान्तौ मृगाक्षौ
विलसितमधिकं तौ प्राप्य केलीगृहान्तः ॥
परमसुख-नितान्त-प्राप्तिपूर्णाभिलाषौ
रतिपतिकमनीयौ प्रापतुः प्रीतिलक्ष्मीम् ॥३६॥

इति श्रीमद्भट्टसदाशिवप्रीतये भोलानाथस्य कृतौ कर्णकुतूहले संभो [ १४A ] गकुतूहलं जातम् ॥२॥



अथातः स्वापो विधीयतामिति महाराजस्येच्छा जाता ॥ ततः कस्याश्चिद्गीर्वाण-भाषाभिज्ञाया सख्या अस्मार्षीत् । सा तत्रागत्याशिषं दत्त्वा ह्यतिष्ठत, पुनः स्थिता सती ह्यपूर्वामेकामाख्यायिकामाह ।

श्रीमहाराज ! पूर्वदिशि कर्णपुरपत्तनं, तत्र परमधार्मिको विजयकीर्तिनामा राजाऽभूत् । तस्य पञ्च पुत्रा आसन् । उदारकीर्तिर्धर्मकीर्तिर्जयकीर्तिर्देशकीर्तिराहवकीर्तिरिति सर्व एव स्वधर्मनिरताः शस्त्रास्त्रशास्त्रविशारदाः । एकदा राजाग्रे नाम नाट्यमभूत्तत्र ते कुमारा आगत्य स्थितास्तद्ददृशुः यथा—

विलसितं नयनाञ्चलचारुतागतिविशेषतया ललितं वपुः ।
वदनचन्द्रचलद्भृकुटीध [१४B] नुर्हरति कस्य न हीदमहो मनः ॥१॥

एवं पुनः सर्वे गीतादि [ कं ] निशम्य प्रणम्य च राजानं स्वस्वमन्दिरं जग्मुः । आहवकीर्तिः कनिष्ठस्तत्रैव स्थितः । राजा अवलोक्य आह, आहवकीर्ते ! त्वया कथं न गतम् ? । कुमारोऽञ्जलिं बद्ध्वा सविनयमाह-महाराज ! मम देशान्तरं द्रष्टुमिच्छाऽस्ति ।

राजा कंचित्कालं स्वगतं विचार्य आह-पुत्र ! तव गेहे सर्वं वर्तते किमर्थं तद्देशान्तरं जिगमिषा । ❀

कुमारः-महाराज ! किंचिन्मे कार्यं नास्ति दिदृक्षैव, अत आज्ञप्तव्यं गन्तव्यमिति ।

❀ देशान्तरजिगमिषेति साधुपाठः ।

राजा पुनरप्याह–वत्स ! नेदानीं तवावसरो गमनस्य ।

कुमारः—पितः न हि मया भवतः परित्यागः क्रियते किन्तु स्वकीयं प्रारब्धं विलोकयितुमेव कीदृशमिति ।

जनकः प्रभुरिव जग [ १५A ] तः सेव्यो ध्येयश्च यः सदा पूज्यः ।
यदि नहि सेवे त्वाहं कथय पितः का गतिर्भूयात् ॥२॥

ततोऽवश्यमेवाज्ञां देहि गच्छेति राजन् ! इदानीमेवागमिष्यामि ।

राजा–यद्येवं तर्हि गम्यतां पुनरागमनं च ते भूयात् ।

पुनः कुमार एवं पितृवचः श्रुत्वा ढक्काघोषः क्रियतां सनह्यतामिति स्वापं विधाय पुनरुत्थितः । कृत्वावश्यकं स्नात्वा च दानं कृतवान्, ततः सन्नद्धोऽभूत् । सर्वे सन्नद्धा अभवन् । ततोऽन्तःपुरे जगामाञ्जलिं कृत्वा मातृणामग्रे स्थितोऽभवत् मातर आशिषं ददुश्चिरायुस्त्वं भूया इति । पुत्र ! किमर्थं गम्यते कुत्र च । तव गेहे सर्वमस्ति । किं कार्यं वर्त्तते वदेत्युक्त्वा साश्रु स्थिता ऊचुः ।

मा कुरु जन्म विधातर्जन्मनि कृते वियोगमपि [१५B] मा देहि ।
देहि मानुष्यं मा कुरु दुःखमिदं वज्रतोऽप्यधिकम् ॥३॥

गद्गद्वाचो जाता वक्तुं किमपि न समर्थाः स्युस्ताः ।
लिखिता इव किं चित्रे, मग्नाः किं दुःखवारिनिधौ ॥४॥

कुमारः—मा कुरु दुःखं मातः किं याता नो मिलन्ति मे तर्कः ।
अश्रुकलाः किल मुञ्चन्नोवाचान्यत्कुमारः सः ॥५॥

तत ऊचुः—पुत्र ! यदि गम्यत एव तर्हि सभार्य एव गम्यताम् ।

कुमारः—यदाज्ञापयन्तु मातरः ।

तथैवाकरोत् सः । प्रणम्याङ्घ्रिस्पर्शं कृत्वा व्यचलत् । ततो दुंदुभिध्वनिरभूत् । तदैव द्वारमगात् । कुमारो भृत्येन अश्व आनीतस्तमारुरोह च ।

हयं तमारुह्य चलन्नृपात्मजः सखायमुच्चैःश्रवसो मरुच्चलम् ।
हरिर्यथाऽसौ शुशुभे शुभाननश्चलद्दृगन्तैश्च निरीक्षितो जनैः ॥६॥ [१६A]

चलन्नयं किञ्चिदुदञ्चितस्मितः शनैश्शनैर्वाचमुवाच सस्पृहम् ।
सेवा च राज्ञः सकलैर्विधेया ततः प्रजानां परिपालनं च ॥७॥

विशालनेत्रानुचरैः परावृतः स वीज्यमानश्चलचामरैर्मुहुः ।
कुमारनामा शुशुभे नृपात्मजो वियत् पतद्गङ्गझरैर्यथामरः ॥८॥

सितातपत्रं न यशः सुधांशुस्तं राजपुत्रं प्रसभं सिषेवे ।
उपार्जितं पूर्वमनेन पुण्यं जनेन तद्रक्षति सर्वतो हि ॥९॥

स रत्नचामीकरकुण्डलोल्लसत्कपोलदेशच्छुरितांशुराशिः ।
व्यरोचि राजन्यकुमारभास्वान् मणिप्रभाभिर्दिवसेश्वरो वा ॥१०॥

शिरोमणिर्भूषयतीव विश्वं रविर्भवेत् किं हृदि मे वितर्कः ।
कथं नु चक्षुःकमलानि लोके फुल्लन्ति दृष्ट्वा सततं जनानाम् ॥११॥ [१६B]

मुक्ताहारः किं नु वक्षःस्थलस्थस्ताराकारो भाति शोभैकशाली ।
गङ्गापातो नाकलोकादुपेतो यात्रासौख्यं भावि भूयो विधत्ते ॥१२॥

एवं स राजन्यकुमारवीरः कुमारशोभामगमत् सशक्तिः ।
अनेकरत्नाभरणात्तशोभः स पद्मपाणिर्हरिरेव साक्षात् ॥१३॥

सभारउष्ट्रश्चलदोष्ठवक्त्रः सरोषमेकं करिणं निरीक्ष्य ।
सयत्नपुंसा नितरां निरुद्धो भयेन मार्गे किल निष्पपात ॥१४॥

नितान्तभारेण निपीडितोऽपि तत्रापि रूढा वनिता हि काचित् ।
पुनश्च पश्चात् कशयापि ताडितो मार्गावरुद्धोऽश्वतरः पपात ॥१५॥

काचिच्चलन्ती चपलायताक्षी तदीयलावण्यमथो विलोक्य ।
जगाम तृप्तिं न जगाम तावन् मुमोह निश्वासततीरुवाह ॥१६॥

काचिन्निता [१७A] न्तं तमनङ्गबाणैर्दृगञ्चलैर्वीक्ष्य मनोभिरामम् ।
मुमोह बाला कलकण्ठनादैर्जगौ हतास्मीति ध्रुवं हतास्मि ॥१७॥

एवं स आहवकेतुः प्रत्यहं चलति स्म । ततो धर्मपुरं नाम नगरं प्राप । तदुपकण्ठं अवततार । ततो नगरदर्शनार्थं जना जग्मुः ।

द्वारदेशधृतहेमकुम्भकान् पत्रपुष्पफललाजमण्डितान् ।
दिव्यवामनयनाद्यलंकृतान् पश्यति स्म च गृहान् जनः सितान् ॥१८॥

अप्सरोभिरभितः सुखगीतं गीयते स्म नितरां श्रुतिसारम् ।
श्रूयते च किल तत्र जनौघैः स्वर्ग एव किमयं समवादि ॥१९॥

उच्चसद्मपङ्क्तयः शुभा सर्ववीथीषु लसन्ति सर्वतः ।
तेषु तत्र विलसन्ति केतवः किं नु गाधिसुतजन्यसिन्धवः ॥२०॥

परिखा नगरस्य सर्व [१७B] तः पृथिवीतो जलधिर्यथा भवेत् ।
किमु मज्जन्ति तरङ्गकैतवात् सततं तत्र सपत्नबुद्धयः ॥२१॥

गोपुराणि नगरस्य समन्तात् शृङ्गवन्ति कनकोज्ज्वलरत्नैः ।
उल्लसन्ति बहुशोभिकपाटैः स्पृशति शशिमण्डलमेतत् ॥२२॥

ततः पुण्यकीर्तिनामा राजा राजकुमारमिलापार्थं समागमत् । उभौ अपि सादरं मिलितौ । गजतुरगालङ्कारान् कुमारः समर्पितवान् । राजा किञ्चिद् गृहीत्वा पुनर्गेहमगात् । कुमारार्थं भोजनसामग्रीं नृपः प्रेषितवान् । आगतमालोक्याङ्गीकृतवान्, स्थापयतेति, तदा सर्वेषां सस्वादं भोजनं जातम् । राजकुमारस्य राजमन्दिरं प्रति गन्तुमिच्छा बभूव । चलति स्म ।

चलन्नसौ कुण्डलवान् किरीटी
दृष्टो जनैः पञ्चशरो हि साक्षात् ।
नेत्राञ्च [१८A] लैर्हन्ति विलोकयन् यं
का नाम बाला न मुमोह दृष्ट्वा ॥२३॥

काचिद् द्रष्टुं चक्षुषी अञ्जयन्ती काचित् पादौ क्षालयन्ती जगाम ।
काचित् कान्ता भूषणं भूषयन्ती काचित् केशान् शोषयन्ती चचाल ॥२४॥

काचिद् बाला द्वारदेशे स्थितासीत् काचिद्योषिन्मन्दिरस्था बभूव ।
काचिन् मार्गे सञ्चलन्ती मृगाक्षी दृष्ट्वा दृष्ट्वा तं न का या मुमोह ॥२५॥

गवाक्षेषु बालाः कृतास्या बभूवुः कुमारो विलोक्याह चन्द्राः किमेते ।
प्रकामं चलद् दृग्विलासैः सहासं मुखानीति सत्यावबोधं जगाम ॥२६॥

काश्चित्कान्ता माल्यवृष्टिं च चक्रुः काश्चित्तद्वल्लाजवृष्टिं वितेनुः ।
एवं पश्यन् राजमार्गं कुमारः प्रामोल्लासं राजगेहं विवेश ॥२७॥

राजा च कुमारमा [१८B] गतं श्रुत्वा झटित्यागत्याग्रे नीतवान्, तत्करं गृहीत्वानीय, राज्यासनोपरि स्थितौ जातौ । ततो राजा कुमारमवदत्, सम्यक् कृतमत्रागतं, राजकुमार म ( त्व ? ) दीयमेवेदं गृहं सर्वथात्र स्थातव्यं यतः ।

बहूनि किल मित्राणि वञ्चकानि धरातले ।
तन्मित्रं दुर्लभं लोके हितकारि विशेषतः ॥२८॥

तस्मान् मित्रं नु कर्त्तव्यं जगन्मित्रं वशं नयेत् ।
यत्र तत्र विधातव्यं कुमारेदं विनिश्चितम् ॥२९॥

कुमारः—महाराज ! सत्यं परन्तु तत्कार्यवशादेव ज्ञायते ।

मित्रामित्रद्वयं लोके ज्ञायते कार्यतो भृशम् ।
चुम्बकस्य यथा लोहो हीरकस्य यथा घनः ॥३०॥

उपकृतये तव चेतो जाने राजन् परं लोके ।
सौशील्यं तव भूयः कस्ते तुलनां समायाति ॥३१॥

अस्मिन्नूलोके धनम [१९A] र्जितं यैः शौर्येण राज्येन नृपैः प्रभूतम् ।
राजन् पुनः सज्जनपात्रभूते यदर्पितं तत् फलतां प्रयाति ॥३२॥

राजकुमारोक्तमिदं निशम्य सप्रसादमाह—

आहवकीर्ते ! अत्र भवद्भिः सर्वथा स्थेयं भवदीयमेव सर्वमिति कथयित्वा यथेच्छं मासिकमाह्निकं कृतवान् । वासाय गृहद्वयं च दत्तम् । तच्च राजपुत्रेण सादरमङ्गीकृत्य ससुखं तत्र च स्थितं । पुनरेकस्मिन् गृहे स्वयमतिष्ठत् द्वितीये च भार्या, सा च विकला कार्यानभिज्ञा दासी चाभिज्ञा तथैव सकलं गृहकृत्यं क्रियते स्म ।

गृहिणी यस्य गेहे ह्यसमर्था कार्यकरणे चेत् ।
तस्य गृहं किल नष्टं जीवितमपि तस्य दुःखदं भवति ॥३२॥

अतो राजपुत्रेण कदापि गृहे न गम्यते । राज [१९B] सेवापरो बभूव । तस्य व्ययाय प्रत्यहं प्रेष्यते स्मैका स्वर्णमुद्रा पुरुषेण केनचित् गत्वा दीयते तस्यैवमेकाब्दो गत पुरुषस्य ॥ एकदा रात्रौ कुमारस्त्रीभवने चौराः प्रविष्टास्ततः ते न किमपि पश्यन्ति स्म ।

चौराः—आः क्व वयमागता एतद्गृहे किमपि न दृश्यतेऽतोऽन्यगृहे प्रविश्यामः* ।

कुतस्तया कुमारपत्न्या यदशनार्थमपेक्ष्यं तदेव गृह्यते स्म वैश्यहट्टायां स्वर्णमुद्रा प्रेष्यते च ॥ ततश्चौरा एकस्य कुवेरनाम्नो वणिजो गृहं गतास्तत्र पश्यंति स्म तत्पुत्री स्वपिति । तत्र चौरैरिदं विचारितं सा कुमारवधूरत्र स्थापनीयेयं वणिक्पुत्री च पल्यं-कात्तत्रेति ॥ ते तथैवाकुर्वन् ॥ कुमारपत्नी वणिजो गृहे स्थापिता वणिक्पुत्री च कुमारगृहे तथै [२०A] व स्थापिता भूरिधनं गृहीत्वा गताश्च स्वगृहं । पुनः किं जातं तत्राह, सा वणिक्-

* प्रविशाम इति साधु पाठः ।

पुत्री रात्रौ तु ससुखं सुस्वाप प्रातरुदतिष्ठत् पश्यति स्म कुत्रागतास्मि केन नीतास्मि कस्य वा गृहे मरैवान्यस्य वाहमेव वान्या एव भवामि पुनः पुनरेवं शुशोच—

नानुकूलमदृष्टं मे प्रतिकूलं हि वर्त्तते ।
कुत आपतितं दुःखं प्रमाथि बलवच्च तत् ॥२३॥

यदिदं मम भावि सर्वथा तदभावीति कथं वदाम्यहम् ।
स्ववशे न हि वर्तते जनः परकृत्य पर एव वेत्तितत् ॥२४॥

भवतु तावत् किं भविष्यति सुदृढं निश्चित्य खट्वायामेव स्थिताऽभवत् न किञ्चित् कञ्चिदुवाच मुहूर्तं । ततः सर्वतोऽवलोक्य दासीमुवाच, हंजे, किं स्वपिषि, उत्तिष्ठ, जलमानयेति श्रुत्वोदतिष्ठत् प्रणनाम च सदन्त [२०B] धावनं जलमानीतं तयाचावश्यकं कृतं, कृत्वा च शय्यायामेव स्थित [T] प्रहस्योवाच, 'निपुणे ! स्नास्येऽहं भूरि जलमानीयतां' दासी–यदाज्ञापयति भवती ।

जलं तया भूरि चानीतं ततः सा मनसि कुमारपत्नी भूत्वा सस्नौ । वस्त्रालङ्कारान् परिदधौ नेत्रे अञ्जयित्वा ताम्बूलं च भुक्त्वा ससुखं स्थिताऽभवत् । द्र (द्र) व्यमग्रे भविष्यतीति । ततः स भृत्यो निपुणामाहूय स्वर्णमुद्रां दत्तवान् ॥ सा निपुणा गृहीत्वा गुणवतीं दत्त्वाऽग्रे ह्यतिष्ठत् जगाद च 'राजपुत्रि ! देह्याज्ञां स्वर्णमुद्रां वणिजं दत्त्वा प्रत्यहमशनार्थं यदानीयते तदानयामि ।' प्रहस्य गुणवत्युवाच 'निपुणे, वणिजमानय ।' सा तथैवाऽकरोत् ॥ ततो वणिगागतः ॥

गुणवती—निपुणे, वद वणिजं कति मु [२१A] द्रास्तव वसंति समीपे ता आनय, यावत् द्रव्यव्ययो जातस्तावत् गृहाण च ।'

वणिक् तथाकरोत् । ता आनीय गुणवतीमर्पितवान् । गुणवत्या व्ययभृता दत्ता अवशिष्टा गृहान्तः स्थापिता । निपुणां चावदत्, 'निपुणे ! वणिजं प्रेरय प्रतिमासमशनार्थमानयान्नादि । [सा] तथैवाऽकरोत् । स वणिक् घृततन्दुलादि सामग्रीमानीतवान् । पुना रसवतीकरणार्थमेकां ब्राह्मणीं गृहे स्थापयामास गृहं च सकलं लेपयामास धवलीचकार ॥

तदुत्तरं गुणवती निपुणामाह, 'अये, निपुणे राजकुमारमानय ॥ सांगीकृत्य जगाम, गत्त्वा च प्रणनाम, राजकुमार त्वामाह्वयति राजनन्दिनी विज्ञप्तिं च करोति अत्रानागतस्य भवत एक हायनो [२१B] गतः ।

कुमारः—निपुणे ! गच्छेदानीम् ।

सा पुनः परावृत्याह, नागच्छति कुमार इति।

गुणवती तां पुनः प्रेरयामास, गच्छानः हठात् कथं नागम्यत इति।

सा च पुनरागत्य विज्ञापयति, कुमार, गन्तव्यमेव तत्र सा मां हठात् प्रेरयत्यानयानयेति। गुणवत्या च राज्यासनं फेननिभा शय्या चायोजि प्रतीक्षा चागमनस्याकारि॥ ततः राजकुमारः किं जातमिति विचिन्त्य समागतो गृहान्तरे गतः। कुमारमागतमवलोक्य झटित्युत्थाय गुणवती प्रणनाम करसम्पुटं कृत्वा ह्यतिष्ठत्। कुमारस्तां विलोक्य सविस्मयो जातः। किमस्या जातमन्यैवेय बभूव॥ तथा—

तप्त-काञ्चन-वर्णाङ्गी चलन्नेत्राञ्चलाञ्चिता।
पूर्वं नैतादृशी दृष्टा कुतोऽयामित्यचिन्तयत्॥ ३५॥

कदापि [२१A] नेदृशी दृष्टा दृश्यतेऽन्यैव सा न हि।
किं जातमस्याश्चिन्तायां ममज्ज स नृपात्मजः॥ ३६॥

गुणवती प्रहस्याह—स्वामिन् किं सस्मितत्वेनावलोक्यते सर्वं अदृष्टकृतं भवति।

येनायं चतुराननो हि भगवान् लोकस्य कर्त्ता कृतः
येनासौ हरिरीश्वरस्त्रिजगतीपालो विभुर्निर्मितः।
संहर्तुं जगतीं हरस्त्रिनयनो येन व्यधायि प्रभु—
र्दैवं तन्न निवारितुं प्रभवति ब्रह्मेति यद्गीयते॥ ३७॥

अदृष्टं कुरुते नित्यमदृष्टे नैव नश्यति।
अदृष्टजन्यं सर्वं हि राजसूनो न चिन्तय॥ ३८॥

गुणवत्योक्तं सर्वमाकर्ण्य तत्पाणी गृहीत्वा तया सह राज्यासने स्थितोऽभवत् पुनस्तौ प्रसन्नमनसा चैकस्मिन् पात्रे भोजनं चक्रतुः ससीधुपानम्। पुनः शयने स्थितौ॥ [२२B]

रूपौदार्यं गुणौदार्यं शीलौदार्यं विलोक्य सः।
गुणवत्या नृपसुतः प्रेमबद्धोऽभवत्तदा॥ ३९॥

दृगञ्चलैः कामशरैः प्रविद्धचित्तौ नितान्तं हृतचित्तवृत्ती।
परस्परं जघ्नतुरम्बुजास्यौ तौ दम्पती बद्धविलासहासौ॥४०॥

निनाय सकलां रात्रिं गुणवत्या कुमारकः।
मेने कृतार्थमात्मानं लोकोत्तरसुखेन च॥

तत उभावपि जातानन्दावस्थायावश्यकं चक्रतुः, स्नात्वा भुक्त्वा च ताम्बूलमभक्षताम्। ततः कुमार आज्ञापुरस्सरेण चलति स्म राजद्वारं गत्वा प्रणमति स्म राजकार्यं चकार। एवं कार्यकारिणः कुमारस्य बहूनि दिनानि गतानि। एकदा रात्रौ शिवायोगिनी रौति स्म श्रुत्वाह च राजा, कः को ऽत्र ?

कुमारः—आहवकीर्तिनामाऽहमस्मि।

रा [२३A] जा–आहवकीर्ते गच्छ क उच्चै र्भाषते रौतीति च दृष्ट्वा पुनर्भेटित्यागमिष्यसि।

राजकुमारोऽङ्गी कृत्यागच्छत् सखड्गपाणिः।

विभेति नो भीः पुरुषः कदाचिद्बध्वा स मध्यं सुदृढं चचाल।
सखड्गपाणिः ससुखं प्रसह्य मनो दृढं यस्य स शूरवीरः ॥ ४२ ॥

तत्पश्चाद् राजा चाचलद् गुप्त एव।

कुमारो गत्वाऽपृच्छत्—कस्त्वं भोः।

शिवायोगिन्यहमस्मि।

कुमारः—किमर्थमिहागत्य रौषीति श्रुत्वाह–'एतन्नगराधिपस्य श्वः कालो भविष्यतीति रौमि।"

कुमारः—कश्चिदुपायोऽस्ति येनास्य मृत्युनिवर्तेत ?

योगिनी—तव गृहे बालो जातस्तद्गलरुधिरं पिबामि चेत्तदा निवर्त्तेत।

कुमारः—भवत्वेवमेव करिष्ये।

ततः कुमारः स्वगृहमगात ॥ तत्रोत्सवं [२३B] ददर्श ॥

गायन्ति गीतं वरयोषितः क्वचिन्नृत्यन्ति नानाप्सरसस्तु गेहे।
सुखं न दुःखं च कुमार आगात स्थिराणि चेतांसि त एव धीराः ॥४३॥

त्यज्यते किं न विद्वद्भिर्गृह्यते किं न दुर्जनैः।
धर्मात्मा न चलेद्धर्माद्धर्मे हि कृतनिश्चयः ॥ ४४ ॥

राजकुमारमागतं दृष्ट्वा सर्वा उत्थायाशिषं ददुः, चिरंजीयात् राजकुमार ते कुमारः, सर्वास्ताः प्राणम्य सूतिकासद्म प्रविष्टस्तमागतमालोक्य गुणवती प्रणम्याह स्वागतं

कुमारः कृताञ्जलिरुवाच योगिन्या यदुक्तं वचः। ततो गुणवती प्रहस्योवाच "महाराजस्यैवं कृते प्राणरक्षा स्यात् किमतः परम् !"

कुमारः—तर्हि बालं देहि ।

गुणवती—नेदं भवदीयं कृत्यं किन्तु मदीयमेव स्यात्तदा सा समुखमकरोत् [२४ A] तदोभावप्यचलताम् ॥

तत्र गत्वा समर्पयतस्तदा सा [ योगिनी ] तयोः सत्यमवलोक्य जगाद, 'गुणवति, पुत्रं गृहाण, गृहं गच्छाहं युवयोरनेन धैर्येण प्रसन्नास्मि राजायं चिरञ्जीयात् बालश्चाय ते। तत उभावपि प्रणम्य च गृहं गतौ बालं शय्यायां स्थापयामासतुर्गुणवतीकुमारौ, गायकेभ्यो नर्त्तकेभ्यः स्वस्तिवाचनिकेभ्यो भूरि द्रव्यं दत्त्वाऽनन्दं जग्मतुः। पुनः कुमारो राजमन्दिरं प्राप। तथैवातिष्ठत्। राजा प्रथममेवागत्य सुष्वाप ।

ततः प्रभातवेलायां वन्दिनः—

जातोऽयं नरलोकपाल ! समयः प्रातः प्रबोधस्य ते।
द्वारे सन्ति भटा रणोत्सवनटाः कर्त्तुं प्रणामं प्रभो !

कार्यं सर्वमिदं कुरुष्व भगवन् राज्यप्रजापालनम्।
सूता मागधवन्दिनश्च सततं कीर्तिं [ २५ B ] जगुर्भूपते: ॥ ४५ ॥

ततः प्रबुद्धो राजा देवीमाजुहाव। सा चागत्य प्रणम्य स्थिता विज्ञप्तिं चकार "किमर्थं महाराजेनाहूतास्मि ? ॥"

राजा—देवि ! राजकुमारेणानेनैतादृशं कृतं तत्प्रत्युपकारं कर्त्तुं मन्निकटे किमपि नास्ति यद्देयमस्मै ।

राज्ञी—एवं चेदेतस्मै कन्या देयातःपरं किं देयं भवति ?

राजा— देवि ! सम्यग् विचारितं योग्यमिदम्।

पुनर्बहिरागतस्तं वेचमुप्रणेसः पुरोहितस्य सस्मार। पुरोहितश्चागत्याशिषं ददौ, 'स्वस्ति ते महाराज ! किमर्थमाहूतोऽस्मि ?"

राजा—कुमारं कन्यां दातुमिच्छामि तिलकमेतस्य कुरु।

पुरोहितः—भवतु महाराज सम्यगिदम्।

स तथा सम्पादितवान्।

कुमारः—महाराजाऽहं भवतां भृत्योऽस्मि नैतद्योग्यं मम।

राजा—तवैव योग्य [ २६ A ] मिदं, गृहाण।

कुमारः—यद्रोचते भवते, इति अङ्गीकृत्य गृहमगात्। गुणवतीं सकलं वृत्तान्तं निवेदितवान् ॥

गुणवती प्रहस्याह 'किमतः परं गृह्णाणेदानीमेव गत्वा'। कुमार आगत्य जग्राह। लक्षमुद्रारत्नालङ्कारा दश गजा दत्ताः। भूयसीं दक्षिणां ब्राह्मणेभ्योऽदात्। तदुत्तरं विवाहो जातः, सुखमुभयत्र भूरि जातः। कुमारो विदायं गृहीत्वा स्वगृहं प्रति चचाल। गत्वा पितुश्चरणौ पस्पर्श ॥ सुखं भूयात् सर्वत्र ॥

रत्नेशः कृतपुण्यरत्ननिचयो रत्नाकरश्चापर—
स्तज्जातः शशिसन्निभः कृतमहादानः कुबेरो यथा।
दिव्यौदुम्बरवंशविश्वविदितः श्रीविश्वनाथः स्वयं
श्रीमान् भट्टसदाशिवक्षितिपतिर्जीयात् सहस्रं समाः ॥२५॥ [B]

तातो यस्य समस्तशास्त्रनिपुणः श्रीनन्दरामाभिधो
माता यस्य च पौष्करीति विदिता पत्यर्चने तत्परा।
वासो देवकलीपुरे निगदितो यत्रास्ति कालेश्वरो
भोलाना इति प्रसिद्धिमगमत् तत्काव्यमेतच्छुभम् ॥ ४७ ॥

श्रीरत्नेशतनयभट्टश्रीसदाशिवप्रीतये भोलानाथकृतौ कर्णकुतूहले भङ्गलं नाम तृतीयं कुतूहलं जातम् ॥ ३ ॥ शुभमस्तु ॥ श्रीः ॥



महाकवि-भोलानाथ-विरचितं

# श्रीकृष्णलीलामृतम्

॥ श्रीगणेशाय नमः ॥

यः सर्वत्र महीतलेऽस्मिन् विदितो देवेन कृष्णात्मना
स्वीयेनैव करेण पुष्पसदृशः प्रस्थापितश्छत्रवत् ।
गोपीगोपजनाश्रयावनपरो भूभृन्नतापाश्रयः
सोऽयं वः किल कान्तिवर्द्धनपरो गोवर्द्धनो वर्द्धताम् ॥१॥
नाम्ना श्रीरामशर्मा हरिचरणरतिप्राप्तसत्कीर्तिकर्मा
तद्ध्यानाप्तावबोधोऽखिलभुवनतलप्राप्ततत्त्वावबोधः ।
प्राप्ता विद्यानवद्या हृदि यजनतया यस्य देवस्य भूम्नः
साक्षाद् गोवर्द्धनोऽसौ हरिरचलतया वर्त्ततां सर्वदान्तः ॥२॥
गोवर्द्धनधराधीश ! गोपगोपीजनाश्रय !
नमस्तुभ्यं नमस्तुभ्यं नरा यत्रामरा इव ॥३॥
गोवर्द्धनधरं नाथं यशोदानन्दनन्दनम् ।
प्रणौमि कृष्णबालं तमबालं पुरुषोत्तमम् ॥४॥
व्रजाङ्गनानां हृदयापहारि यत् तदीयरूपं कुसुमायुधाधिकम् ।
अहं प्रवृत्तोऽस्मि च तस्य वर्णने मदीयवाचो हसनं भविष्यति ॥५॥
तथाप्यहं तद्वचनेन पूततां दृढं गमिष्यामि न चेदमन्यथा ।
अतः प्रवृत्तोऽस्मि तदीयवर्णने संभाव्यतां नैव मदीयदूषणम् ॥६॥
जन्माद्यस्य यतः सतां सुकृतिनां स्वर्गापवर्गौ यतो
यत्सेतुर्जगतां भवेद् यदखिलं ब्रह्मेति निष्कर्षतः ।
भक्तानां हितहेतवे यदभवत् पूर्णेन्दुबिम्बाननः
कृष्णः सत्यमनन्तमद्वयमसौ चित्ते स्थिरीभूयताम् ॥७॥
नमस्तुभ्यं नमस्तुभ्यं कृष्णायामिततेजसे ।
पूर्णेन्दुवदनानन्दगृहीताखिलचेतसे ॥८॥
मयूरपिच्छमुकुटः कृष्णः कनककुण्डलः ।

वनमालोल्लसद्वक्षा वेणुनादविभूषितः ।
गोपीजनमनोहारी कृष्णः स हृदि वर्त्तताम् ॥१०॥

गोचारणरतो नित्यं नित्यं भक्तजनाश्रयः ।
गोवर्द्धनस्य नाथोऽयं सदा मे हृदि वर्त्तताम् ॥११॥

यदस्य जन्मजनितं सुखं गोपव्रजौकसाम् ।
कोऽपि तं नैव जानाति देवानामपि दुर्लभम् ॥१२॥

जगत्त्रयविभुर्यश्च ब्रह्माद्या यस्य मूर्त्तयः ।
स एवाजनि नन्दस्य गेहे साक्षाद्धरिः स्वयम् ॥१३॥

शकटस्य च यो हन्ता गोपीनां हर्षवर्द्धनः ।
स च देवः परं ब्रह्म कृष्ण इत्यभिधानतः ॥१४॥

पूतनामृत्युमासाद्य यतो मोक्षमवाप सा ।
स्मरणीयोऽनिश देवः स दुष्टेऽपि कृपानिधिः ॥१५॥

तृणावर्त्तो हतो येन तृणवद्बालरूपिणा ।
मातोरसि लुठन्तं तमादायानन्दमाययौ ॥१६॥

बालमव्यक्तकर्माणं वालोपेतं विलोक्य तम् ।
बकस्तुण्डेन जग्राह तरसा क्रोधनो बली ॥१७॥

दहन्तमग्निवत्तुण्डं स तत्याजासुरद्रुहम् ।
गृहीत्वा तं स तुण्डेन द्विधाचक्रे सुरोत्तमः ॥१८॥

चारयन्तं सरित्तीरे वत्सान् बालमरिद्रुहम् ।
वत्सासुरोऽभ्यगात्तत्र ज्ञात्वा गोपालनन्दनम् ॥१९॥

गृहीत्वा परपादौ तं भ्रामयित्वा व्यपोथयत् ।
हरिः शिलायां स तदा गतासुरभवद्बकः ॥२०॥

क्षेपयन्तं विषाणाभ्यां सरित्तीरमभीरुवत् ।
ज्ञात्वा वृषासुरं कृष्णो हन्तुमभ्यागतः पुरः ॥२१॥

गृहीतोत्खातशृङ्गाभ्यां व्यहनत्तं रुषा हरिः ।
गतासुरभवत् सोऽथ पुष्पवृष्टिरभूद्दिवः ॥२२॥

अथो जिगमिषा तेषां जाता वृन्दावनं प्रति ।
मृत्युना किल भीतानां गोपानां कृष्णचेतसाम् ॥२३॥

आरुह्य शकटान् जग्मू रामकृष्णपुरोगमाः ।
गायन्त्यः कृष्णचरितं गोप्यः शुशुभिरेऽध्वनि ॥२४॥

ततो वृन्दावनं प्राप्ताः चक्रीकृत्य च सर्वतः ।
शकटान् न्यवसन् सर्वे मुदा प्राप्तश्रियो वने ॥२५॥

रामकृष्णावुभौ तत्र रेमाते परया मुदा ।
गोपाः सबालाः सस्त्रीका गावो वत्साश्च रेमिरे ॥२६॥

चलत्तरङ्गनिचया कदम्बतरुशोभिता ।
प्रफुल्लेन्दीवरश्यामा यमुना तत्र राजते ॥२७॥

कृष्णः कमलपत्राक्षो विजहार सरित्तटे ।
गोपीनां वेणुनादेन व्यहरत् सुमना मनः ॥२८॥

एकदा सहितो बालैर्दूरं गाश्चारयन् गतः ।
पीतवासा घनश्यामो यत्रास्ते कालियः फणी ॥२९॥

विषाग्निना ज्वलद्वारि सफेनं बुद्बुदायते ।
तद्वायुस्पर्शतो व्योम्नः पतन्ति विहगा ह्रदे ॥३०॥

परिधानं दृढं बध्वा कदम्बमधिरुह्य सः ।
पपातोपरितः कृष्णः स यत्रास्ते महानहिः ॥३१॥

कूर्दनोत्थजलेनाशु प्लावितास्तटभूमयः ।
विहरन्तं हरिं दृष्ट्वा नागपत्न्योऽवदन् रुषा ॥३२॥

गच्छ गच्छाशु रे बाल दन्दशूकोऽस्ति दुष्टधीः ।
तरसा तत उत्थाय भोगी भोगेन चावृणोत् ॥३३॥

शरीरशक्त्या निःसार्य गृहीत्वा भ्रामयद्धरिः ।
क्षीणशक्तिं परित्यज्य तत्फणासु ननर्त्त सः ॥३४॥

तत्थं तत्थं ततस्तत्थं तत्थतत्तत्थतस्तु तत् ।
ततं तेन ततं तेन मृदङ्गध्वनितोऽभवत् ॥३५॥

नृत्यति स्म हरिः साह्लादहेमूर्द्धसु दर्पहा ।
नताननः स्तुवन्नासीद्देवदेवं जगत्पतिम् ॥३६॥

तव पादतलाघातैः पूतोऽस्मि भगवन् हरे !
गङ्गाया उद्भवो याभ्यां नतोऽस्मि प्रणतोऽस्मि तौ ॥३७॥

जगज्जनिरभूद्यस्मात्तन्मध्ये दुष्टधीरहम् ।
पालनीयोऽस्मि भवता मदीय इति बुद्धितः ॥३८॥

नागपत्न्योऽस्तुवन् देवं दण्डवत् पतिताः पुरः ।
अश्रुमुख्यो नतग्रीवाः कृताब्जकरसम्पुटाः ॥३९॥

नमस्ते जगन्नाथ भूयो नमस्ते मुखेन्दो प्रसीदाशु भृत्ये नमस्ते ।
वयं दासदास्यो भवामस्त्वदीयाःत्वदीयाङ्घ्रिपद्मं नतास्मो नतास्मः ॥४०॥

इति तासां वचः श्रुत्वा प्रसन्नोऽभूज्जगत्पतिः ।
गच्छाशु स्वालयं नाग न भयं ते भविष्यति ॥४१॥